वक्तुमपि शक्तः ?, आस्तां परिहर्तुम् ॥ २४ ॥
आप्नोतीति सर्वेषु पदेषु योज्यम् ॥ २५ ॥

× × × × × × ×

आत्मीयेनैव दोषेणोपहतो भवति ॥ २८ ॥
सर्वेषामपायानां स्थानस्य द्यूतादिसर्वव्यसनराजमार्गस्य–सर्वसंचरणपथस्य ग्रासीभूतः क्षणमपि–स्तोककालमप्यास्तां प्रभूतकालं, दुःखादन्यत्सुखमुपगच्छेदिति प्रतीतिः ॥ २९ ॥
भवे नरकादौ संसरणं, तत्र दुर्गमार्गो–विषमाध्वा, तस्य प्रणेतारो–नायका आदेशका एते कषायाः, कारणभूतत्वात् ॥३०॥
ममकाराहङ्कारयो रागद्वेषापरपर्यायः, पदद्वयस्य पर्याये व(मू)लमान्तरम् ॥ ३१ ॥
द्वन्द्वं–युगलं । समासः–संक्षेपः ॥ ३२ ॥
मिथ्यादर्शनं–तत्त्वाश्रद्धानलक्षणं, प्रमादो–मद्यादिः, योगाः–सत्यादयः, तन्मिथ्यात्वाविरतिप्रमादादियुतौ रागद्वेषौ॥३३॥
मूलप्रकृतिसम्बन्धी ॥ ३४ ॥

× × × × × × ×

तस्याः प्रकृतेर्बन्धोदययोर्विशेषोऽविनाशेनाऽवस्थितिः–स्थितिः, अनुभागो–रसः, प्रदेशो–दलसंचयः ॥ ३६ ॥
तेषु बन्धभेदेषु चतुर्षु प्रदेशबन्धो योगात्–मनोवाक्कायव्यापारात्तस्य–प्रदेशाख्यस्य कर्मणः ॥ ३७ ॥

वर्णकानां वन्धो–दृढीकरणं, तस्मिन् श्लेप इव ॥ ३८ ॥

न( रकादि )गतिर्भवगतिर्मूलं–वीजं यस्या, इन्द्रियविपयाः ( स्पर्शनादयः ), निवृत्तिः (?) ॥ ३९ ॥

दुःखकारणं कर्म तथा तयाऽऽदत्ते ॥ ४० ॥

कलाऽस्त्यस्मिन्निति कलं–ग्रामरागरीत्या युक्तं, रिभितं–घोलनासारं, योपिद्भिर्भूपणं–नूपुरादि, श्रोत्रेन्द्रियेऽवबद्धं हृदयं येन ॥ ४१ ॥

सविकारा गतिर्नयनोत्थं निरीक्षितं, देहसन्निवेशः, प्रेरितः ॥ ४२ ॥

स्नानमङ्गप्रक्षालनं चूर्णं, वर्तिर्गात्रानुलेपिनी, वर्तीनां समूहो वार्तिकं, चन्दनादिभिः स्नानादिभिर्गन्धैर्भ्रमितमाक्षिप्तं मनोऽस्येति सः ॥ ४३ ॥

खण्डशर्करादिः, स एव विपयो रसनायास्तस्मिन्नासक्त आत्मा यस्य। गलो–लोहमयोऽङ्कुशो, यन्त्रं–जालं, पाशो–वालादिमयस्तित्तिरादिग्रहणहेतुस्तैर्बद्धो–वशीकृतः ॥ ४४ ॥

आसनं–मसूरकादि, सम्बाधनं–विश्रामणा, सुरतं–मैथुनासेवा, अनुलेपनं–कुङ्कुमादिः, स्पर्शः–प्रियायाश्चुम्बनादिः। मोहितमतिः ॥ ४५ ॥

शिष्टा–विवेकिनः परलोकपथनिपुणास्तेपामिष्टा दृष्टिचेष्टाः । दृष्टिः–सन्मार्गोपदेशनं, चेष्टाः–क्रियाः । दोषेष्वनियमं ग्राहितानीन्द्रियाणि यैः ॥ ४६ ॥

× × × × × × ×

इन्द्रिययोग्यो विषयो भावः । येनाऽक्षाणीन्द्रियाणि तृप्तिं प्राप्नुवन्त्यनेकस्मिन्मार्गे प्रकर्षेण लीनानि ॥ ४८ ॥

विषयो–रूपादिः परिणामवशान्मृतकलेवरादिवशादशुभः स्यात्, कचवरादिरशुभोऽपि वर्यः स्याद्धूपनादिना ॥ ४९ ॥

कारणवशेन–निमित्तसामर्थ्येन यद्यत्प्रयोजनमर्थो जायते, यथा–येन प्रकारेण स्यात्तथा–तेनैव प्रकारेण तमर्थं शुभमशुभं चिन्तयति, यथा–शत्रुमं विषं पितृमं च ॥ ५० ॥

शब्दादिः स्वरोचनेन परितोषमाधत्ते । स्वमत्या विकल्पो द्विषादिपरिणामजनितविकल्पनं, तत्राऽभिरता आसक्ताः ॥५१॥

कदाचिद्वेषवशतः समुपजातरागस्य कदाचिद्रागवशान्निश्चयतः परमार्थतस्तद्रागद्वेषकारणमेव ॥ ५२ ॥

रागद्वेषकृतप्रतिघातस्य ॥ ५३ ॥

इन्द्रियव्यापारे–शब्दादिप्रवर्तने भव्यमभव्यं वा करोति परिणामं रागयुतो द्वेषयुतः, स आत्मनो भावः कर्मबन्धस्य तस्य तस्य निमित्तमात्मनो–जीवस्य भवति ॥ ५४ ॥

× × × × × × ×

मोहोऽज्ञानं, तत्त्वार्थाश्रद्धानं मिथ्यात्वमाश्रवेभ्योऽनिवृत्तिरविरतिः, रागादिभिर्विकथादिप्रमादमनःप्रभृतियोगयुतैः ॥५६॥

× × × × × × ×

एतेषां दोषाणां संचयस्य जालमिव जालं, दुःखहेतुत्वादामूलादुद्धर्तुमप्रमत्तेन शक्यम् ॥ ५८ ॥

रागद्वेषादिजालस्य मूलकारणं जीवस्येति शेषः ॥ ५९ ॥

नव कोटयो ३ हनन ३ पचन ३ क्रयणानां स्वयं करणकारणानुमतिभिस्त्रिरूपास्ताभिरुद्गमादिभिश्च शुद्धं यदुञ्छमात्रं भैक्ष्यं, तेन यात्रा–ऽधिकारात्संयमयात्रा, तया निर्वाहो यस्य, शुद्धतमाहारोपधिपात्रग्रहणतत्परस्येति भावार्थः ॥ ६० ॥

सर्वज्ञभाषितजीवादिपदार्थपरमार्थस्वरूपभावनाशीलस्य जीवाजीवाधारभूतलोकावगतस्वरूपस्य वक्ष्यमाणाष्टादशसहस्र-शीलाङ्गधारणकृतप्रतिज्ञस्य ॥ ६१ ॥

दर्शनमोहनीयकर्मक्षयोपशमेन दर्शनशुद्धिरूपमनुप्राप्तस्य धर्माध्यवसायेऽध्यवसायस्याऽन्योन्यं स्वदर्शनपरदर्शनापेक्षयो-त्तरोत्तरविशेषं पश्यतो जिनागमे ॥ ६२ ॥

त्रस्तस्य । स्वहितार्थे–आत्मपथ्यमोक्षप्रयोजने आभिमुख्येन रता–बद्धा प्रीतिर्मतिर्यस्य ॥ ६३ ॥

*अनन्तसंख्यायाः सूचिका भवकोटयः ॥ ६४ ॥*

समुदया–धनधान्यादिनिचयाः । धर्मे–क्षान्त्यादिके । तदारोग्यादि लब्ध्वा–प्राप्य हितकार्ये शास्त्राध्ययनादौ ॥ ६५ ॥

शास्त्रमिह लौकिकमथवा शास्त्राणामागमो गमनं तल्लाभमिच्छता ॥ ६६ ॥

कुलमुमादि, वचनं माधुर्यादिगुणमच्छेषाणि प्रतीतानि, सम्यच्छब्दः प्रत्येकं योज्यते ॥ ६७ ॥

आगमव्रतमूलनिर्णयं प्रति निकषः–कषपट्टसमानः,परीक्षास्थानमित्यर्थः।वि–विशेषेण नीतः–प्राप्तो विनयो येन स तथा॥६८॥

हितकाङ्क्षिणा–मोक्षाभिलाषिणा शिष्येण ॥ ६९ ॥

अपथ्यसमाचरणं, तदेव धर्मस्तदपनोदकर्ता। गुरुमुखमलयाचलोद्भूतचन्दनरसस्पर्शः ॥ ७० ॥

शुश्रूषा–श्रोतुमिच्छा, यदाचार्य उपदिशति तत्सम्यक् शृणोति क्रिययोपयोगं च नयति ॥ ७२ ॥

तपसोऽनशनादेर्बलं–सामर्थ्यं संवरफलं। निर्जरा–कर्मपरि [शाटिः] साटिः ॥ ७३ ॥

योगनिरोधः शैलेशीप्राप्तिरूपोऽतो विनय एव कार्यः ॥ ७४ ॥

विनयाद् व्यपेतं–विगतं मनो येषां ते। त्रुटिमात्रमणुमात्रप्रायं, विषयः–शब्दादिस्तत्सङ्गादजरामरवत्–सिद्धवन्निरुद्विग्ना–निर्भयाः ॥ ७५ ॥

ऐहिकसुखमानिनः रसलाम्पट्यं सातं–सुखमृद्धिर्विभवो रसा–मधुरत्वादय, एतेषु गौरवं रसलाम्पट्यं, तस्माद्धेतोर्वर्तमान-सुखदर्शिनोऽतीवानुकूलविषयोपभोगपराः ॥ ७६ ॥

जात्या–अवितथा, हेतवो–दृष्टान्ताश्चरितकल्पितोदाहरणानि–तैः प्रसिद्धं, अजरमपरापरप्रदानेऽप्यक्षीणमुपनीतं–दीयमानं, तेनैव बहुमन्यन्ते। रसायनमप्यविरुद्धं नित्यानित्ययोरेकत्र वस्तुनि सहाऽवस्थानेऽपि विरोधरहितत्वं, न कस्याऽपि भयं करो-तीत्यभयकरं–क्षुद्रोपद्रवनाशि ॥ ७७ ॥

प्रकुपितपित्तधातुत्वाद्विपरीतबुद्धिस्तस्य क्षीरं कटुकं भवति ॥ ७८ ॥

यद्यपि मुहुःसह्यपरिषहेन्द्रियनिरोधसम्भवसन्तापादादौ कटुकं तथापि निश्चयं पर्यन्तकाले मधुरमनेककल्याणयोगाद्रम-णीयं। भव्यसत्त्वानुग्रहाय गणधरादिभिरहितं पथ्यं हितं। उद्वृत्ताः–स्वच्छन्दचारिणः ॥ ७९ ॥

जातिर्मात्राऽन्वयः, कुलं पितृसमुद्भवं, रूपं प्रतीतं, बलं शारीरः प्राणो, लाभः—प्रार्थितार्थप्राप्तिर्बुद्धिरौत्पत्तिक्यादिर्वाल्ल-भ्यकं—प्रियत्वं, श्रुतमागमः, क्लीबा—असत्त्वाः ॥ ८० ॥

भवभ्रमणे । (एवं) ज्ञात्वा को नाम विद्वान् जातिमदमालम्बेत्? ॥ ८१ ॥

अनेकान् जातिविशेषान् जन्मोत्पादानिन्द्रियनिर्वृत्तिरिन्द्रियनिष्पत्तिः पूर्वकारणं येषाम् ॥ ८२ ॥

शीलमाचारः, शेषाणि प्रतीतानि, ननु—नियमेनैव ॥ ८३ ॥

रूपबलश्रुतबुद्धिविभवाद्यो गुणास्तैरलङ्कृतस्य सुशीलस्य कुलमदेन प्रयोजनं—कार्यं न विद्यते ॥ ८४ ॥

चयो—वृद्धिरपचयो—हानिस्तौ यस्य। रोगजरापाश्रयिणो—रोगजराधारस्यैवं शुक्रादिसम्पर्कनिष्पन्ने देहे को मदावकाशोऽस्ति?, अपि तु नाऽस्त्येव ॥ ८५ ॥

सर्वदा संस्कर्तव्ये चर्मण्यसृजाऽऽतता स्थगिते । कलुषं मूत्रपुरीषरुधिरमेदोमज्जास्नायुप्रभृति, तेन व्याप्ते । निश्चयेन विनाशधर्मो यस्याऽस्ति ॥ ८६ ॥

अतितीव्रज्वरशूलविसूचिकादिवेदनार्त्तः सन् तरुणबलोऽपि क्षणेन विगतबलत्वमुपैति । सुसंस्काराद्यप्रणीताहाराभ्यवहाराद्रसायनदेवताराधनसामर्थ्याद्वीर्यान्तरायकर्मक्षयोपश माद्भेति ॥ ८७ ॥

अनियतो भावः—सत्ता यस्य, कदाचिद्भवति कदाचिन्न भवति, विज्ञाय मरणबले प्राप्ते शरीरबलं द्रविणबलं च न क्रमते प्रतिक्रियायै ॥ ८८ ॥

क्षयोपशमाल्लाभो भवति, लाभान्तरायकर्मोदयाच्च न लभते किञ्चित्, नित्यानित्यौ दीनतागर्वौ ॥ ८९ ॥

परो-दाता गृहस्थादिस्तस्य दानान्तरायक्षयोपशमोत्था शक्तिः, स्वशक्त्यनुरूपं ददाति । दातुर्यदि चेतः—प्रसन्नता भवति, साधुं प्रति गुणानुराग उपयोगः । यत्राहारादिना ॥ ९० ॥

ग्रहणं-बहूनामपि पृथक् पृथग्वदतामपि पृथक् पृथक् शब्दोपलब्धिः, उद्ग्राहणं-संस्कृतगद्यपद्यशब्दार्थाभिधानं, परस्मा इति शेषः । नवकृतयो-ऽभिनवं स्वयमेव प्रकरणाध्ययनादिकं करोति, विचारणा-सूक्ष्मेषु पदार्थेष्वात्मकर्मबन्धमोक्षादिषु युक्त्यनुसारिणी जिज्ञासादि, अर्थावधारणमाचार्यादिवचनविनिर्गतस्य शब्दार्थस्य सकृदेव ग्रहणं, न द्वित्रिवारोच्चारणादिप्रयासः, आदिशब्दाद्धारणा परिगृह्यते । बुद्धेरङ्गानि शुश्रूषादीनि, तेषां विधिर्विधानमागमेन प्रतिपादनं, तस्य विधेर्विकल्पास्तेषु कियरस्वनन्तैः पर्यायैर्वृद्धास्ते क्षयोपशमजनितबुद्धिविशेषाः परस्परमनन्तैः पर्यायैर्वृद्धाः सर्वद्रव्यविषयत्वान्मतिश्रुतयोरित्येवं बुध्यङ्गविकल्पेष्वनन्तभेदैर्वृद्धेषु सत्सु ॥ ९१ ॥

पूर्वपुरुषा गणधरप्रभृतयश्चतुर्दशपूर्वधरादयो यावदेकादशाङ्गविदवसानाः, सिंहा इव सिंहाः, परीषहकषायकुरङ्गप्रतिहननात्, तेषां विज्ञानातिशयो-विज्ञानप्रकर्षः, स एव सागरः-समुद्रो, विस्तीर्णबहुत्वात्, अनन्तस्य भाव आनन्त्यं, श्रुत्वा-विभाव्य, साम्प्रता-वार्तमानिकाः ॥ ९२ ॥

कुत्सितं प्रियं भाषणं चटुकर्म, उपकारो निमित्तं यस्य, चटुकर्मणो निमित्तं मातापितृसम्बन्धादिकं कृत्वा ॥ ९३ ॥

परजनप्रसन्नताजनितेन तेन स्पृश्यते ॥ ९४ ॥

श्रुतपर्याया मेदा अनन्तगुणादयोऽसंख्यभवपरिच्छेदा उपर्युपरि पश्यतः सर्वं दरिद्रमिति विदित्वा विकरणं–विक्रियां, कृतशेषश्रुतदाननिषेधमिति शेषः, वैक्रियसिंहरूपनिर्माणम् ॥ ९५ ॥

सम्पर्कश्च–संसर्ग आचार्यादिबहुश्रुतैः सह:,उद्यमश्च–प्रोत्साहः । मूलगुणा उत्तरगुणास्तेषां निष्पादकं श्रुतज्ञानं लब्ध्वा॥९६॥

"ज्ञानं मददर्पहरं, माद्यति यस्तेन तस्य को वैद्यः?। अमृतं यस्य विषायति, तस्य चिकित्सा कथं क्रियते?"॥१॥ ॥९७॥

जात्यादिमदमत्तः शुचिपिशाचाभिधानद्विज इव दुःखभाग्भवति ॥ ९८ ॥

जात्यादीनां बीजविनाशोद्यतेनाऽऽत्मोत्कर्षः परदूषणोद्घोषणं च ॥ ९९ ॥

परतिरस्कारः । भवे भवे, कोटिरानन्त्यसूचिका ॥ १०० ॥

कर्मशब्देन गोत्रमेव । तद्रूपमेव योनिविशेषाश्चतुरशीतिलक्षास्तदन्तरैः कृतविभागम् ॥ १०१ ॥

देशादीनां समृद्धिपर्यन्तानां विषमतां विलोक्य भवसंसरणे ॥ १०२ ॥

अनादृतगुणदोष, एवंविधो जीवः । पञ्चेन्द्रियाणां निजनिजविषयगार्द्ध्यं, तेन विवलो–गतशुभपरिणामो रागद्वेषोदयनियन्त्रितः ॥ १०३ ॥

*घटितव्यं–चेष्टितव्यम्* ॥ १०४ ॥

तत्कथं चेष्टितव्यमित्याह–अनिष्टविषयाभिकाङ्क्षिणा भोगिना–भोगसक्तेन सह वियोगो विषयाणां कथं स्यात्? । 'वै' इति प्रश्ने, आगमोऽभ्यसनीयः, अतिबाढं व्यग्रहृदयेनाऽपि यथावद्विज्ञायैतानपायबहुलानागमोऽभ्यसनीयः ॥ १०५ ॥

औत्सुक्यकारकाः–प्रकटोल्वणस्नेहरागा । निकर्षे–प्रान्ते । बीभत्सादिभिर्बहुलाः ॥ १०६ ॥
दुःखान्ताः ॥ १०७ ॥
शाकोऽष्टादशो यत्र तीमनं । मोदकाम्लकरसादि । परिणतिसमये ॥ १०८ ॥
उपचारश्चाटुकर्मविनयप्रतिपत्तिः शयनादिः । सम्भृतपिण्डितरम्यकानि रतिकराण्यविच्छेदकारिणः ॥ १०९ ॥
देवनारकाणां नियतकालं, अनियतकालं मनुष्यतिरश्चाम् ॥ ११० ॥
इष्टपरिणामाः सन्तोऽनिष्टपरिणामाः, अनिष्टपरिणामाः सन्तोऽभीष्टपरिणामाः । आलोचनीयः सर्वक्षेत्रावस्थाभावित्वात् । एवं चाऽनवस्थितपरिणामविषयविरतावनुग्रहो गुणयोगतः । उपलक्षणत्वाद्बहुगुणश्चित्तप्रसन्नता ॥ १११ ॥
इत्थं गुणान्दोषरूपेण दोषांश्च गुणरूपेण यः पश्यति गुणदोषविपरीतोपलब्धिः । प्रथमाङ्गं विलोक्य परिरक्ष्यः ॥ ११२ ॥
विधिना विज्ञेयः ॥ ११३ ॥
शस्त्रपरिज्ञानामाऽऽद्याध्ययनार्थं संक्षेपेणाऽऽह—मातापित्रादिगौरवाणामृद्ध्यादीनां षड्जीवकाययतना प्रथमेऽध्ययने, गौरवस्त्यागो द्वितीये, द्वाविंशतिपरिषहविजयस्तृतीये, दृढसम्यक्त्वं चतुर्थे ॥ ११४ ॥
संसारोद्वेगः पञ्चमे, कर्मनिर्जरोपायः षष्ठे, वैयावृत्त्योद्यमः सप्तमे, तपोविधिरष्टमे, योषितां त्यागः–स्त्रीपरिहारो नवमे ११५
अम्बरं–वस्त्रं, भाजनं–पात्रकादि, तयोरेषणा, तथाऽवग्रहा देवेन्द्रादेः, एते कीदृशाः शुद्धाः–शुद्धिमन्तः ॥ ११६ ॥
स्थानं कायोत्सर्गरूपं, निषद्या–स्वाध्यायभूमिः, त्यागः–शब्दरूपयोररागः, क्रियाशब्दः सर्वत्र, परक्रियानिषेधः, प्रयत्नतस्त-

पश्यतो निष्प्रतिकर्मणः परो यदुपकरोति संस्करोति तदयुक्तं, अन्योन्यक्रिया साऽपि निष्प्रतिकर्मवपुशो न युज्यते ॥ ११७॥

साध्वाचारः पूर्वोक्ताध्ययनकथितस्वरूपः । खलु–निश्चयेन । अयं प्रत्यक्षः ॥ ११८ ॥

भावना–वासनाऽभ्यासः षड्जीवनिकाययतनादिका, तदाचरणेन च गुप्तहृदयस्य च–मूलोत्तरगुणैर्गुप्तमनस्कतदनुष्ठानव्यग्रस्य, किंभवतीत्याह—न तदस्ति कालविवरं, यत्र कालच्छिद्रेऽभिभूयते प्रमादकषायविकथादिभिः ॥ ११९ ॥

× × × × × × ×

स्वल्पकालेनैव विपरिणामधर्माः–कुत्सितपरिणामधर्मा अन्यथाभवनस्वभावाः, मर्त्या–मरणधर्मिणो मनुष्यास्तेषामृद्धिसमुदया–धनधान्यहिरण्यस्वर्णादिविभूतिसमूहा अनित्याः । संयोगाः–पुत्रपुत्रीप्रभृतिसम्बन्धाः विप्रयोगावसानाः शोकोत्पादका भवन्ति, ततो न किञ्चिद्विषयाभिलाषेण ॥ १२१ ॥

भोगजनितसुखैः क्षणविनश्वरैः प्रभूतभीतिभृतैः काङ्क्षितैरभिलषितैः शब्दादिविषयाधीनैः किं?, न किञ्चित्प्रयोजनमेभिस्तस्मात्तेष्वभिलाषमपहाय नित्यमात्यन्तिकमभयमविद्यमानभीतिकमात्मस्थं–स्वायत्तं [ यत् ] प्रशमसुखं, मध्यस्थस्याऽरक्तद्विष्टस्योपशान्तकषायस्य यच्छर्म तदेवंविधं तत्रोद्यतो भव ॥ १२२ ॥

इन्द्रियग्रामस्य शब्दादिविषयस्य लब्धुमिच्छतः प्रिये कर्तव्ये यावत्प्रयासः क्रियते तावत्तस्यैवाऽक्षसमूहस्य निग्रहे वरतरं–बहुगुणमृजुचित्तेनोद्यमः कृतः ॥ १२३ ॥

सरागेण–मोहयुक्तेन विषयाभिलाषतः प्राप्यं सुखं तस्मादनन्तकोटिगुणितं मूल्यं विनाऽनायासेन वीतरागः प्रशमसुखमाप्नोति ॥ १२४ ॥

इष्टस्या(इष्टा)वियोगकाङ्क्षानिष्टविप्रयोगकाङ्क्षोत्पन्नं दुःखं सरागः प्राप्नोति, न वीतरागः ॥ १२५ ॥

एतेषु हास्यादिभेदेषु निभृतः स्वस्थस्तस्य यत्सुखं तद्रागिणां कुतः? ॥ १२६ ॥

एवं गुणयुक्तोऽपि केवलमनुपशान्तोऽशमितविषयकषायस्तं गुणं निरुत्सुकत्वं रत्नत्रय्युपचयरूपं नाऽऽप्नोति ॥ १२७ ॥

चक्रवर्तिवासुदेवादिस्तस्य महेन्द्रस्य च तादृशं सुखं नाऽस्ति यादृशं प्रशमस्थितस्य ॥ १२८ ॥

स्वजनपरजनविषयां चिन्तां दारिद्र्यधनाढ्यदौर्भाग्यसौभाग्यादिरूपां विहाय । आत्मपरिज्ञानमनादौ संसारे परिभ्रमन्नयमात्मा सुखदुःखान्यनुभवन्नपि न तृप्तः, सोऽधुना कथमेभिस्तृप्तो भवेत्तदधुना यथा संसारे बहुसङ्कटेऽयं न भ्रमति तथा प्रयत्नो मया कार्य इत्यात्मज्ञानचिन्तन एवाऽभिरतः परकार्यविमुखो जितमदनादिसर्वदोषः सुखमास्ते, स्वस्थः–उपद्रवरहितस्तिष्ठति । निर्जरो, निर्गताऽपेता जरा–हानिः, सा च प्रस्तावात्प्रशमामृतस्य यस्याऽसौ निर्जरः ॥ १२९ ॥

कृषिवाणिज्यादिचिन्तनं लोकवार्ता, धर्मनिर्वाहपृच्छा शरीरनिर्वाहचिन्तनं । शोभनक्षान्त्यादिसद्धर्मचरणवार्तार्थं एतद्द्वयम[पीष्टं]भीष्टं लोकवार्तातच्छरीरवार्तायाः कारणम् ॥ १३० ॥

आधार–आश्रयो, वर्तत इति शेषः, धर्म[ब्रह्म]चारिणां–संयमिनां । लोके जातमृतसूतकनिराकृतगृहगमनादि, मधुमांसादि च धर्मविरुद्धम् ॥ १३१ ॥

देहः–शरीरं, नैवाऽन्नपानवसनादिभिर्विना यापयितुं शक्यस्तान्यन्नपानवसनादिसाधनानि लोकवशानि, सद्धर्मस्य क्षमादेरविरोधाद्धर्मविरुद्धत्यागेनाऽनुवर्तनीयः ॥ १३२ ॥

दोषेणाऽनुपकारी भवति, प्रत्युताऽपकारेण प्रवर्तते परो लोकः क्रुध्यति । आत्मना ॥ १३३ ॥

पिण्डैषणाध्ययनभणितो निश्चयेन कल्प्यो ग्राह्योऽकल्प्यः परिहार्यः, आगमे आदानासेवनयोर्नियतवृत्तेः । तेन–विधिगृहीताहारेण ॥ १३४ ॥

व्रणे–गण्डे लेपः, अक्षस्य धुरा, सैवोपाङ्गं, अभ्यवहरेदित्यत्राऽपि योज्यं, असङ्गा–मनोवाकायेष्वसङ्गाः साधवस्तेषां योग्यः क्रियानुष्ठानं, तेषां भरः–सङ्घातः, स एव तन्मात्रं, तस्य यात्रा–निर्वाहस्तदर्थं, धर्मानुष्ठाननिर्वाहार्थमित्यर्थः । पन्नगो यथा घर्षणवर्जितमेव गिलत्येवं साधुरपि, चिलातिपुत्रमारितधनश्रेष्ठिसुतामांसास्वादकपितृपुत्रादिवद्वा, यथा तैः शरीरस्य धारणार्थमेव तत्कृतं, तथा साधुरपि ॥ १३५ ॥

विशिष्टतरास्वादमगृद्धचित्तेन साधुनेति प्रक्रमः, तद्विपरीतमविद्यमानास्वादमपि द्वेषरहितेन, वृको यथा सरसं विरसं वा न विलोकयति, तद्वत्साधुनाऽपि दारूपमधृतिना–दारुतुल्यसमाधिनाऽऽस्वाद्यं–वस्तु, [पुनरा]स्वाद्यं–क्रिया ॥ १३६ ॥

कालमुष्णकालादि, स्निग्धेतरादि च क्षेत्रं सुभिक्षादिकं च, मात्रामल्पादिरूपसात्म्यं, यद्यस्योपभुक्तं परिणतिमेति । द्रव्याणां–घृतगुडादीनां गुरुत्वं लघुत्वं, यद्वा येन द्रव्येणोपभुक्तेन गुणानां गौरवं शेषाणां लाघवं चाऽऽत्मनः स्यात् । भोज्यं वस्तु ॥१३७॥

अन्यदीपग्रहिकं दण्डकाद्युत्सर्गतः कल्प्यं-कल्पनीयं, अपवादतो-गाढालम्बनेनाऽकल्प्यमपि ग्राह्यं लघुतरदोषासेवनं सद्धर्मदेहरक्षानिमित्तं कारणं तेनोक्तम् ॥ १३८ ॥

कल्प्याकल्प्य-शुद्धाशुद्धविधिज्ञः संविग्ना-ज्ञानक्रियायुक्ताः सहाया यस्य । स्वभावविनीतो, दूषणदूषितेऽपि रागादिर-हितः ॥ १३९ ॥

धर्मोपकरणेन-वस्त्रपात्रादिना धृतं वपुरस्य, अलेपको-लोभेन न स्पृश्यते ॥ १४० ॥

अकृतगार्धो धर्मोपकरणयुक्तोऽपि न स्नेहमुपगच्छति । निर्ग्रन्थो-वक्ष्यमाणपरिग्रहरहित इति ॥ १४१ ॥

ग्रन्थोऽष्टविधं कर्म, सम्यक्त्वाद्विपरीतं, प्राणातिपातादिभ्योऽनिवृत्तिः,अशुभमनोवाकाया, अशठं-मायारहितं, सम्यगु-पच्छति ॥ १४२ ॥

संवर्धनमुपष्टम्भं वा व्यवहारे व्यापाररूपे ज्ञानादीनामुपग्रहकारि दोषाणां निग्रहकारि यद्वस्तु, तन्निश्चये कल्पनीयं, नाऽवशिष्टम् ॥ १४३ ॥

यद्वस्त्वन्नपानादि दर्शनज्ञानाचाराहोरात्राभ्यन्तरानुष्ठेयव्यापाराणां विनाशकारि, यच्च प्रवचनकुत्साकारि मद्यमांसकन्द-मूलाभोज्यगृहभिक्षाग्रहणादि, तत्सर्वं कल्प्यमप्यकल्प्यम् ॥ १४४ ॥

कल्प्याकल्प्यत्वं शुद्धवस्तुन्यप्यनियतं, पुरुषाद्यपेक्षयेति शेषः, यथा विकारभाजां शुद्धमपि क्षीरादि निषिध्यते, नेतरेषां नीरुजां, भेषजं तदन्येषां कल्प्यतेऽशुद्धमपि ॥ १४५ ॥

देशोऽसाधुपरिचितक्षेत्रं, कालो दुर्भिक्षादिः, पुरुषः प्रव्रजितराजादिः, अवस्था मान्द्यादिका, एतेषामर्थेऽकल्प्यमपि कल्प्यं, उपयोगशुद्धिपरिणामाश्चैवैकान्तेन कल्प्यते कल्प्यं, नैवैकान्तेन न कल्प्यतेऽकल्प्यम् ॥ १४६ ॥

*यतिना–साधुना तदेव चिन्तनीयं भाषणीयं कायेन कर्तव्यं, यदात्मनः परेषामुभयेषां बाधकं न भवत्यतीतादि-* सर्वकाले ॥ १४७ ॥

सर्वेषु शब्दादिसर्वेन्द्रियार्थेषु[ विषयेषु, इन्द्रियसङ्गतेषु–]श्रोत्रादीन्द्रियगणस्य गोचरतां प्राप्तेषु । वैराग्यमार्गः–सज्ज्ञान-क्रियासेवनं, तस्मिन्नन्तरायकारिषु परिसंख्यानं–इतरत्वनिःसारत्वाहितकारित्वपरिज्ञानं कार्यं–ध्येयं, केन ? परं–कामार्थधर्मेषु प्रधानं नियतं शाश्वतं कार्यं–मोक्षप्राप्तिलक्षणमिच्छताऽभिलाषिणा ॥ १४८ ॥

भावयितव्यमहर्निशं *चिन्तनीयमभ्यसनीयं, किं तत् ?,* अनित्यत्वं–संसारे सर्वस्थानानामशाश्वतत्वं, अशरणत्वं–जन्म-जरामरणाभिभूतस्य नाऽस्ति किञ्चिच्छरणं, एकत्वं–एक एवाऽहं, अन्यत्वं–स्वजनधनदेहादिकेभ्योऽन्य एवाऽहं, अशुचित्वं–आद्युत्तरकारणाशुचितामयस्य शरीरस्याऽशुचिभावादशुचित्वं, संसार इति माता भूत्वा भगिनीत्यादिभवभावना, आश्रव-द्वाराणि विवृतानि कर्माश्रवः, आश्रवद्वारपिधानं संवरः ॥ १४९ ॥

कर्मणां क्षपणोपायो निर्जरणं, लोकायामादिलोकविस्तरः, शोभनोऽयं धर्मस्तत्त्वतः–परमार्थतश्चिन्ता धर्मस्वाख्याततत्त्व-चिन्ताः, बोधेः सुदुर्लभत्वं चेति प्रकटम् ॥ १५० ॥

इष्टजनसम्प्रयोगश्चर्द्धिसम्पच्च, विषयसुखसम्पच्च, सम्पच्छब्दः प्रत्येकं योज्यः ॥ १५१ ॥ अभिद्रुतेऽभिभूते ॥ १५२ ॥

आकालिकहितं–सदाभाविशुभाचरणं, एकेनैवाऽऽत्मनाऽसहायेन स्वस्याऽर्थे ॥ १५३ ॥

स्वजनात्पित्रादेः, परिजनाद्दासादेः, विभवात्कनकादेः, शरीराद्देहाच्च, तेभ्यो भिन्नोऽहं, पृथक्कर्मणि यस्य नियता नक्तं-दिनमालोचिका, हिर्यस्मात्, शोककलिः–कलिकालस्वरूपम् ॥ १५४ ॥

कर्पूरादीनां वपुःसम्पर्कादशुचिकरणसामर्थ्यात्, शुक्रशोणिताद्याद्यकारणानामन्नपानाद्युत्तरकारणानामशुचित्वात् ॥१५५॥

संसारभावनामाह—दुहिता–सुता ॥ १५६ ॥

स सम्यग्दृष्टिरपि–[यो]न विरतः प्राणातिपातात्, सोऽपि[ विरतोऽपि ]प्रमादवान् । मनोदण्डाः* ४ वाग्दण्डाः ४ काय-दण्डाः ४, तदेवं पञ्चदशप्रकारदण्डरुचिः, ततश्चाऽयमर्थः–प्रमादवान् यो जीवस्तस्य यथैते भेदा बहवस्तथाऽऽश्रवकर्मण्या-श्रयस्थानानि भवन्तीति । आश्रवविधिरुक्तस्तस्मिन्नाश्रवकर्मणि विषये तेषां भेदानां निग्रहे यतेत ॥ १५७ ॥

अनुपादाने वृत्तिर्व्यापारः । पाठान्तरे गुप्तिर्गोपनं, आत्मन्यारोपितो हितः । वरदैस्तीर्थकरादिभिः ॥ १५८ ॥

विशोषणाल्लङ्घनादुपचितोऽपि–पुष्टोऽपि, दोषोऽजीर्णात्मकः, त[द्व]त्कर्मोपचितं बन्धादिभिर्निरुद्धाश्रवद्वारो जीवः संवृतः ॥

सर्वत्र–यत्र न जातं न मृतं मयेति । परमाण्वभृतीन्यनन्तानन्तस्कन्धपर्यवसानानि द्रव्याणि, तेषां मनोवाक्कायादिभिरु-पयोगा, न च तैस्तृप्त इति चिन्तयेत् ॥ १६० ॥

* प्रत्येकस्य कषायचतुष्काश्रयित्वाच्चतुःप्रकारता मनःप्रभृतीनां दण्डानाम् ।

सुपु-निर्दोषः ख्यातः । [अत्र]क्षमादिलक्षणधर्मे । सुखपरम्परया ॥ १६१ ॥

कल्प[कल्य]ता-नीरोगता, आयुर्दीर्घायुष्कं, श्रद्धा-धर्मजिज्ञासा, कथकश्चाऽऽचार्यः, श्रवणं चाऽऽकर्णनं, एतेषु नव-सूत्तरोत्तरदुर्लभेषु सत्स्वपि, बोधिः सद्धर्मस्याऽऽख्याता (?) सम्यग्दर्शनं, [तस्य] सम्यग्लाभो [ दुर्लभो ] भवति ॥ १६२ ॥

अवाप्याऽज्ञानाद्रागारपत्नीपुत्राद्यासक्तेः कापथविलोकनात्-कुपथदर्शनादेकैकनयानुसारिजिनप्रणीतागमवचनैकदेशस्वयु-क्तिनिरपेक्षविचारणाद्बहयो निह्नवा जज्ञिरे, गौरववशात् ॥ १६३ ॥

रागप्रहाणमार्गो दुःखेनाऽधिगम्य इन्द्रियादिस[पत्नविधुरेण]म्पन्नो (?)-वैरिविह्वलेन । विरागमार्गप्राप्तौ विजयस्तेन प्राप्तो भवति येन सर्वविरतिरवाप्नोति ॥ १६४ ॥

गणशब्दः प्रत्येकमभिसम्बध्यते, नेतारस्तान् कषायान् पूर्वं "हतं सैन्यमनायक"मिति न्यायात् [ साधयेत् ] ॥ १६५ ॥

सञ्चिन्त्य-आलोच्योदयनिमित्तं-प्रादुर्भावकारणमुपशान्तेर्हेतुः-कारणं च, कषायाणामुदयनिमित्तं परिहार्यमुपशान्ति-हेतुरासेवनीयः । कथं ?, त्रिकरणशुद्धं-कायवाङ्मनोनिर्दोषं, अपिरभ्युच्चये । इति भावनाऽधिकारः ॥ १६६ ॥

शौचं-संयमं प्रति निर्लेपताऽदत्तादानापरिग्रहो वा, चः समुच्चये, संयमः सप्तदशभेदः, त्यागो द्रव्यभावग्रन्थत्यजनम् ॥१६७॥

क्षमाप्रधानः ॥ १६८ ॥

गुर्वभ्युत्थानाद्यधीना गुणा ज्ञानादयो यस्मिन् पुरुषे ॥ १६९ ॥

यथाचेष्टितं [न]तथाऽऽख्याति तस्य च शुद्धिर्नाऽस्ति ॥ १७० ॥

द्रव्यं सचेतनादि, शैक्षादि सचेतनादि—"अट्ठारस पुरिसेसु, वीसं इत्थीसु दस नपुंसेसु। पव्वावणा अणरिहा, अणहा पुण इत्थिआ चेव* ॥ त्ति (†अहवा विगलंगरूवाइं) ॥ १ ॥" इति[पाठान्तरम्]। उपकरोति ज्ञानादीनां, तदप्युद्गमादिशुद्धं शुचि, तथा भक्तपानादि, तदुद्गमादिदोषरहितं शुचि, अन्यदशुचि। देहशुचि पुरीषाद्युत्सर्गपूर्वकं निर्लेपं निर्गन्धं देहमधिकृत्य प्रवृत्तं। भावशौचं निर्लोभताविधायि कार्यं—कर्तव्यम् ॥ १७१ ॥

आश्रयाः—प्राणातिपातादयः कर्मादानहेतवस्तेभ्यो विरतिकरणं। पञ्चेन्द्रियाणि स्पर्शनादीनि, तेषां निरोधः। कषायाः क्रोधादयश्चत्वारस्तेषामुदयनिरोधः। दण्डा मनोवाक्कायाख्याः, अभिद्रोहाभिमानेर्ष्यादिकरणं मनोदण्डः, हिंस्रपरुषानृतादिभाषणं वाग्दण्डः, धावनवल्गनप्लवनादिरूपः कायदण्डः, एभ्यो निवृत्तिरेव संयमः सप्तदशभेदो भवति ॥ १७२ ॥

बान्धवाः—स्वजनाः, धनं—हिरण्यादि, पञ्चेन्द्रियविषयसुखं, एतेषां त्यागात्। भयमिहलोकादि सप्तविधं, विग्रहः—शरीरं, (तस्य)प्रतिकर्मणा त्यागात्साधुर्मुनिरत्यक्तात्मा—परिहृतासंयमपरिणामोऽष्टविधग्रन्थविजयप्रवृत्तः, परिहृताभिमानममत्वभारोऽस्पृहिष्टस्त्यागी ॥ १७३ ॥

न विसंवादनं यथादृष्टवस्तुभाषणं, तेन योगः—सम्बन्धः, त्रिविधेन योगेनाजिह्मता—ऽकौटिल्यं, कायेनाऽन्यवेषधारितया

---

* दृश्यतेऽस्या आर्यायाश्चतुर्थं चरणं "इय अणला (अयोग्याः) आहिया सुत्ते" इत्येवंरूपमात्मप्रबोधादिषु। भावपुरीयप्रतिकृतौ तु "क्लीनपुंसकं पाऽऽश्रित्यैष पुनर्निषेधस्तदत्यन्तप्रतिषेधाय" इति टिप्पनी ॥ † "तह वियलंगस्सरूवा य" इति प्रवचन० गा० २५।

विप्रतारयति, मनसाऽसत्यं प्रागालोच्य भाषते करोति वा, वचनेन सद्भूतनिह्नवासद्भूतोद्भावनं कटुकसावद्यादिभाषणं, एतत्परिहाराच्चतुर्विधं सत्यं जिनेन्द्रवचने, न त्वन्यत्र ॥ १७४ ॥

अनशनं–चतुर्थभक्तादि षण्मासान्तं तपस्तथा भक्तप्रत्याख्यानेङ्गितमरणपादपोपगमनादि, ऊनोदरता–द्वात्रिंशत्कवलेभ्यो यथाशक्ति यदाहारमूनयति, वृत्तिर्वर्तनं–भिक्षा, तस्याः संक्षेपणं–दत्तिभिर्भिक्षाभिश्च परिमितग्रहणं, रसत्यागः–क्षीरदध्यादिविकृतीनां यथाशक्तिपरिहारः, कायक्लेशः–कायोत्सर्गोत्कटुकासनातापनादिः, संलीनः–सिद्धान्तोपदेशेनेन्द्रियनोइन्द्रियभेदेन, तद्भावस्तत्ता, इन्द्रियसंलीनः–संहृतेन्द्रियव्यापारः, कूर्मवत्, नोइन्द्रियसंलीनो–निष्कषायमार्तरौद्ररहितं मनो धरन् परोपलक्ष्यं बाह्यं तपःप्रोक्तं जिनादिभिः ॥ १७५ ॥

प्रायश्चित्तमालोचनादिदशविधमतिचारमलप्रक्षालनार्थं, एकाग्रचित्तनिरोधो ध्यानं, तत्राऽऽर्तरौद्रे व्युदसनीये, धर्मशुक्ले द्वे ध्यातव्ये। व्यापृ[तस्य]तो भावो वैयावृ[त्त्यं]त्तं, आचार्यादीनां दशानां भक्तपानवस्त्रादिभिरुपग्रहः शरीरशुश्रूषा चेति, विनीयते येनाऽष्टविधं कर्म स विनयो ज्ञानदर्शनचारित्रोपचारभेदात्, व्युत्सर्गोऽतिरिक्तोपकरणभक्तपानादेरुज्झनं, स्वाध्यायो वाचनादिः पञ्चविधः, अभ्यन्तरस्य मिथ्यादर्शनकषायादेरपाकरणात्तपोऽपि ॥ १७६ ॥

दिव्यं भवनेशव्यन्तरज्योतिष्कविमानवासिदेवीनां सम्बन्धि, तस्मान्मनोवाक्कायैः कृतकारितानुमतिभिर्विरतिर्नवभेदा, औदारिकं मनुष्यतिर्यक्सम्बन्धि, तत्राऽपि मनोवाक्कायैः कृतकारितानुमतिभिश्च विरतिनवकं, तदेवं ब्रह्माऽष्टादशभेदं भवति ॥ १७७ ॥

आत्मन्येव व्यापारोऽध्यात्मं, कथमयमात्मा बध्यते? कथं वा मुच्यते? इति, तद्विदन्तीत्यध्यात्मविदस्ते । मूर्च्छा-गार्ध्यं, निश्चयनयाभिप्रायेणाऽऽत्मन प्रतिविशिष्टपरिणामस्तां परिग्रहशब्दवाच्यतया कथयन्ति, यस्मादेवं तस्माद्वैराग्यमिच्छता, आकिञ्चन्यं परो धर्मः, न किञ्चिन्ममेति विगतमूर्छया स्थेयम् ॥ १७८ ॥

दशप्रकारक्षमादिधर्मस्याऽनुष्ठायिनस्तदासेविनः सदैवाऽनवरतं शिवोपायसेविनो दृढानां-वज्रभेदानां, रूढानां-चिरकालावस्थितिप्राप्तस्थैर्याणां, घनानां-बहलानां, एवंविधानामपि ॥ १७९ ॥

माया लोभश्च मानः क्रोधश्च, उद्धताः-सावष्टम्भाः, प्रबलाः-प्रकृष्टसामर्थ्याः । विनाशयति, साधुरिति योगः ॥ १८० ॥

व्यतिकरः-सम्पर्कः, विरक्तता-पूर्वमहर्षिसमाचीर्णक्रियाकलापरता, सद्भावा जीवादयः, एतानि धर्मस्थैर्यजनकानि॥१८१॥

आक्षिप्यन्ते धर्मे प्रत्यभिमुखाः प्राणिनो यया साऽऽक्षेपणी, विक्षिप्यन्ते-परापरदेवादिदोषकथनेन प्रेर्यन्ते प्राणिनो यत्र सा विक्षेपणी, विमार्गा-जैनमार्गादन्य एकान्तमतावलम्बिनस्तेषां बाधने समर्था पदरचना यस्याः सा, श्रोता चाऽसौ जनश्च, तस्य श्रोत्रमनसोस्तयोः प्रसादजननी, यथा जननी-माता ॥ १८२ ॥

सम्यग्विवेच्यते-नरकादिदुःखेभ्यो भयं ग्राह्यते यया सा संवेजनी, निर्वेदं कामभोगेभ्यो यया सा,एवमेताम् ॥ १८३ ॥



यावत्कालं, अध्यात्मचिन्तापन्नस्य न तेनाऽपि परदोषगुणकीर्तनव्यापारेण किञ्चित्प्रयोजनं, तावत्कालं व्यग्रं-व्यापृतम्१८४

आचारादिश्रुतपाठेऽपरेषां पठने चाऽद्य मया किं कृतं? इत्यादि स्वात्मनि संचिन्तने ॥ १८५ ॥

शासूङ् अनुशिष्टाविति वाग्विधिविज्ञिश्चतुर्दशपूर्वधरैः, विशेषेण नियतो निर्णीतः। दैङ् त्रैङ् पालनार्थे सर्वशब्दविदां-संस्कृतप्राकृतादिशब्दविज्ञानाम् ॥ १८६ ॥

रागद्वेषव्यास चित्तान् शिक्षयति-'विपरीतमशुभं मा कुरु, अनवरतं शुभमविपरीतं कुरु'इत्यादिना, तथा संत्रायते-रक्षति सदाचारे, स्थितानिति शेषः, कुतो? नरकादिदुःखात् ॥ १८७ ॥

शासनस्य-शिक्षणस्य सामर्थ्यं-बलिष्ठताऽनेन संत्राणस्य-पालनस्य बलेन चोभयेन सहितं यत्तच्छास्त्रमुच्यते सिद्धान्तः। संसारभावमनुवदतां मोक्षं दर्शयतां सर्वविदामेतद्वचनम् ॥ १८८ ॥

बन्धः-कर्मोपादानं, मोक्षः-कर्माभावः ॥ १८९ ॥

एतानि विवरीपुस्तावज्जीवानाह-असंख्येयप्रदेशात्मकाः सकलोपयोगभाजः मुक्ताः-सिद्धाः, संसारिणो-भवस्था लक्षणतश्चिह्नत एकेन्द्रियादयो ज्ञातव्या इति, लक्षणतो-ऽसाधारणस्वरूपतः ॥ १९० ॥

× × × × × × ×

एवमनेकप्रकाराणामेकैको विधिरेकैको भेदोऽनन्तकालवर्तित्वादनन्तपर्यायः, अनन्ताः पर्याया-धर्मा यस्य, अन्तर्मुहूर्तादारभ्यैकैकसमयवृद्ध्या त्रयस्त्रिंशत्सागरोपमाणि यावत्स्थितयः, अङ्गुलासंख्येयभागादारभ्य यावत्समस्तलोकावगाहः, ज्ञानं-वस्तुविशेषावबोधो, दर्शनं-वस्तुसामान्यावबोधः, पर्यायास्तारतम्यकृतविशेषाः ॥ १९३ ॥

उपयोगश्चेतनाज्ञानदर्शनव्यापारः, साकारो-विकल्परूपो ज्ञानोपयोगस्तद्विपरीतो दर्शनोपयोगो ह्यष्टचतुर्भेदः ॥ १९४ ॥

ज्ञानं मत्यादि, मतिश्रुतावधयो मिथ्यात्वोदयोपरक्तस्वभावा अज्ञानतां यान्ति ॥ १९५ ॥

औदयिकः स च–जीवोपात्तकर्मणामुदयो देवनारकादिपर्यायकारी, पारिणामिको–जीवभव्याभव्यत्वादिरूपस्त्रिकालतद्-
विच्युतिरूपः, उपशमः–कर्मणां विपाकप्रदेशद्वयरूपोदयभावस्तेननिर्वृत्त औपशमिकः सम्यक्त्वचारित्ररूपः, सम्यक्त्वज्ञान-
चारित्रादिरूपः क्षयोत्थः ॥ १९६ ॥

गतिर्नरकादिः ४, कषायाः क्रोधादयः ४, लिङ्गं स्त्रीपुंनपुंसकं ३, मिथ्यात्वमज्ञानमसंयतत्वमसिद्धत्वं, लेश्याः ६, एते कर्मोद-
यादाविर्भवन्ति । पारिणामिकौपशमिकौ पूर्वोक्तत्रिविधद्विविधौ भवतः क्रमेण कर्मोदयनिरपेक्षसापेक्षौ च । कर्मक्षयाज्जातः
क्षायिकः, स नवविधः–सम्यक्त्वचारित्रकेवलज्ञानकेवलदर्शनदानादिपञ्चलब्धिभेदतः । क्षायोपशमिकोऽष्टादशविधो मत्या-
दिज्ञानचतुष्कमज्ञानत्रिकं चक्षुरादिदर्शनत्रिकं दानादिपञ्चलब्धयः सम्यक्त्वं चारित्रं देशविरतिश्चेति । षष्ठश्च सान्निपातिकः
पूर्वोक्तभावानां द्विकादिसंयोगजः, स च पञ्चदशभेदो ग्राह्योऽन्य एकादशभेदरूपस्त्याज्यो, विरोधित्वात् ॥ १९७ ॥

एभिरौदयिकादिभिर्भावैरात्मा–जीवः, स्थानं गतिरिन्द्रियाणि सम्पदः सुखं दुःखं, एतानि संप्राप्नोति । स्थीयते यत्र
संसारे जघन्यादिस्थितिः–स्थानमात्मनः, स चाऽऽत्मा समासेनाऽष्टविकल्पस्तानाह ॥ १९८ ॥

द्रव्यात्मा कषायात्मा योगात्मोपयोगात्मा ज्ञानात्मा दर्शनात्मा चारित्रात्मा वीर्यात्मा । मार्गणा–परीक्षा चेति ॥ १९९ ॥

साम्प्रतमेषां स्वरूपं प्रतिपादयति–जीवानामेकाक्षादीनां सर्वत्र जीवत्वान्वयात्, अजीवानां धर्मास्तिकायादीनामजीव-
त्वान्वयांशाद्द्रव्यात्मा स्यादिति १ । कषायाः सन्ति येषां ते कषायिणः–समोहास्तेषां सकषायिणां कषायैः सहैकत्वापत्तेः

कपायात्मा २। योगा–मनोवाक्कायव्यापारास्तदेकत्वपरिणत आत्मा स योगात्मा सयोगानां स्यात् ३। उपयोगो–ज्ञानदर्शन-व्यापारो ज्ञेयविपयस्तत्परिणत उपयोगात्मा सर्वजीवानां, न त्वजीवानाम् ॥ २०० ॥

सम्यग्दर्शनसंपन्नस्य तत्त्वार्थश्रद्धानभाजो यो ज्ञानपरिणामः स ज्ञानात्मा ५। चक्षुरादिदर्शनपरिणतानां दर्शनात्मा सर्वजीवानां भवति ६। प्राणातिपातादिपापस्थानेभ्यो विरतानां तदाकारपरिणतानां चारित्रात्मा ७। वीर्य–शक्तिप्रवर्तनं, तद्भाजां सर्वेषां संसारिणां वीर्यात्मा ८ ॥ २०१ ॥

एतेऽष्टौ विकल्पाः प्रतिपादितास्तत्र द्रव्यात्मानमाशङ्कते–आत्मेति ज्ञानदर्शनस्वभावश्चेतनः प्रतीतः, सोऽजीवविषयपुद्ग-लादिपु कथमात्मशब्दप्रवृत्तिः? इत्यत्रोच्यते–उपचारो–व्यवहारः, स चाऽततीत्यात्मा भवति व्युत्पत्तितः शब्दवाच्यः, सर्वद्र-व्यविपयश्चैप न्याय इति नयविशेषेण–सामान्यग्राहिणा नयेन। स्वरूपात्पररूपात् ॥ २०२ ॥

संयोगो–रूपं,अनेकेन भेदेन निर्देशः परीक्षणीयः। स्वतत्त्वं–सहजं स्वरूपं, इष्टमुपलब्धं लक्षणैश्चिह्नैरनेकभेदं समस्त-मात्मनः। "चित्तं चेयणसन्ना, विन्नाणं धारणा य बुद्धी य। ईहा मई विअक्का, जीवस्स उ लक्खणा एए ॥ १ ॥" ॥२०३॥

उत्पत्तिविपत्तिस्थिरतालक्षणं यत्सर्वमपि तदस्ति, अङ्गुलीवत्। एवं यन्नाऽस्ति तदुत्पादादित्रयवन्न भवति, खरशृङ्गवत्। अर्पितं–विशेपितं जिनप्रवचनमुत्पन्नं, अनर्पितं–अविशेपितं प्राकृतजनप्रणीतं अतीतं सप्तविकल्पवचनम् ॥ २०४ ॥

कुशूलाद्यवयवावस्थायां घटाद्यभावः। घटोऽयमुत्पन्न इति। तेनाऽऽकारेण तस्य घटस्य ॥ २०५ ॥

चशब्दादतीते। यस्य पदार्थस्य। तेन पदार्थेन ॥ २०६ ॥ पञ्चाऽजीवद्रव्याणि, रूपरसगन्धस्पर्शवत् ॥ २०७ ॥

न हि द्रव्यप्रदेशाः सन्त्यन्ये च वर्णादयः, किन्तु तमेव प्रदेशं वर्णादिपुद्गलाः सन्निहिताः स्युः ॥ २०८ ॥

अनादिपारिणामिकं पुद्गलद्रव्यं । सर्वभावेष्वौपशमिकादिषु वर्तन्ते ॥ २०९ ॥

विवृतपादस्थानस्थितो, विवृतपादभ्राम्यमाणनराकार इति ॥ २१० ॥

तत्र लोकेऽधोमुखशरावाकारमधोलोकमूर्ध्वलोकं शरावसम्पुटाकारम् ॥ २११ ॥

जम्बूद्वीपादिभेदेन । वैमानिकदेवलोकाः १०, ग्रैवेयकाः ३, अनुत्तराः १, सिद्धिः १–१५ ॥ २१२ ॥

अयशेषं–समस्तलोकासंख्येयभागादिकं एको जीवः पृथिव्यादिको व्याप्नोति, 'वा' शब्दात्समस्तलोकं केवलीसमुद्घातगः केवली ॥ २१३ ॥

धर्मास्तिकायादयस्त्रयोऽप्यसंख्येयप्रदेशाः । जीवद्रव्यमनन्तसमयं । कर्तृपर्यायशून्यानि ॥ २१४ ॥

गतिनिमित्तं, स्थित्युपकारी ॥ २१५ ॥

सूक्ष्मता परिणामः स्कन्धानामेव, तत्सद्भावेन त इन्द्रियग्राह्याः साक्षात्। भेदो–द्व्यादिस्कन्धानां पृथग्भवनं । स्पर्शादयः पुद्गलद्रव्यस्योपकाराः, शब्दपरिणामः पुद्गलद्रव्याणामुपकारः । कर्मपुद्गलानां बन्धः क्षीरनीरवदिन्द्रधनुरादिः ॥ २१६ ॥

विचेष्टितानि–विविधव्यापारोत्क्षेपणाकुञ्चनादयः । उपग्रहः । सौभाग्यादस्यीकरणादिः, जीवितदं क्षीरघृतादि, मरणदं विषास्त्रादि, संसारिजीवविषयाः ॥ २१७ ॥

परिणमनं–परिणामो, यथा–वर्धतेऽङ्कुरो हीयते वेत्यादिकालजनित उपकारः, इदं वर्तत इदं न वर्तते वर्तनायाः, परत्व-

मपरत्वं कालकृतं, पञ्चाशद्वर्षात्पञ्चविंशतिवर्षोऽपरः, पञ्चवर्षाद्दशवर्षः परः । शिक्षा—लिप्यादिग्रहणासेवनादिर्वा ॥ २१८ ॥
द्विचत्वारिंशत्प्रकृतयः पुण्यं, द्व्यशीतिः पापम् ॥ २१९ ॥
आगमपूर्वो मनोवाक्कायव्यापारः, तस्य योगस्य विपरीतता । गुप्तिर्गोपनं, स्थगिताश्रवद्वारः ॥ २२० ॥
संवृतात्मनस्तपसा पूर्वार्जितस्य कर्मणः क्षयः । उपधानं—योगोद्वहनादि, तेन नव्यकर्मप्रवेशाभावः ॥ २२१ ॥
जीवादिषु निश्चयेन परिणामः । सद्भूतमिति ॥ २२२ ॥ शिक्षा—जिनोदितक्रियाकलापाभ्यासः पुनः पुनः ॥ २२३ ॥
एतद्द्विप्रकारं । विस्तराधिगमो—विस्तरपरिच्छेदो * । विपरीतार्थग्राही प्रत्ययो विपर्ययः । समासतो द्वेधा ॥ २२४ ॥
आभिनिवोधिकं—मतिज्ञानम् ॥ २२५ ॥
ज्ञानानां क्रमेणाऽष्टाविंशतिचतुर्दशषड्द्विभेदा उत्तराः, विषयो—गोचरो मतिश्रुतयोः सामान्यतः सर्वद्रव्येषु सर्वपर्यायेषु ।
अवधिरूपिषु, मनःपर्यायं मनोगतद्रव्येषु, केवलं तु सर्वद्रव्यसर्वपर्यायेषु, आदिशब्दात्क्षेत्रकालादिपरिग्रहः । ( विस्तराधिग-
माः—विस्तरपरिच्छेदः ) एकस्मिन् जीवे युगपदेकादीनि कियन्ति ?, भाज्यानि—भजनीयानि चत्वारि, यावत्केवलावाप्तावप-
रज्ञानाभावः ॥ २२६ ॥
मतिश्रुतावधयः ॥ २२७ ॥

---

* सम्भाव्यते षड्विंशत्यधिकद्विशततमायाः कारिकाया अयं पर्यायः, तत्रैवास्य शब्दस्य मूले वृत्तौ च पर्यायस्य विद्यमानत्वा-
दत्र वा विद्यमानत्वात् ।

समो–रागद्वेषविकलस्तस्याऽऽयो–लाभस्तत्र भवं सामायिकं। प्राक्तनपर्यायच्छेद उत्तरपर्यायस्थापनं। परिहरणं–परिहारस्तेन विशुद्धं । सूक्ष्मो–ऽत्यन्तकिट्टीकृतः सम्परायो–लोभकषायः, सूक्ष्मसम्परायगुणस्थानवर्तिनः । अकषायं यथाख्यातम् ॥२२८॥

अनेकैर्बहुप्रकारैरनुयोगैः किं कतिविधं कस्येत्यादिभिर्नयैर्नैगमादिभिः, प्रमाणैः प्रत्यक्षादिभिः, समनुगम्यं–ज्ञेयम् ॥२२९॥

एकतरस्याः सम्यग्दर्शनादिसम्पदोऽभावेऽपि, अपिः पूरणे, मोक्षमार्गोऽपि–मुक्तिप्रापकोऽपि न सिद्धिकरः, त्रिफला-व्यपदेशवत् ॥ २३० ॥ चारित्रं दर्शनज्ञानलाभे । चारित्रलाभे ॥ २३१ ॥

धर्मो दशविधः । आवश्यकानि–प्रतिक्रमणालोचनादीनि ॥ २३२ ॥ सम्यक्त्वादीनां जघन्याद्याराधनानाम् ॥ २३३ ॥

सम्यक्त्वादिसम्पदां तत्परेण–व्यग्रेण, तेष्वेव–सम्यक्त्वादिषु । तत्परेषु साधुषु, जिनेषु, भक्तिरान्तरा–प्रीतिः । उपग्रह-स्तदुचिताशनपानशयनासनादिप्रदानरूपः । समाधिः–स्वास्थ्यं स्वपरयोः । एतेषां करणेन ॥ २३४ ॥

यत्नमेव प्रपञ्चयति–गुणानां ज्ञानादीनां । परतप्तिषु । अधृष्यस्याऽधर्षणीयस्य, मत्सरश्चित्तस्य एव कोपः ॥ २३५ ॥

प्रशम एव निराबाधसुखं सदाचारे रतस्य साधोरिति, तस्य किं साधर्म्यं ? सुरासुरनरलोकेऽस्मिन् ॥ २३६ ॥

न केनाऽपि व्ययं प्रापितं–बाधितम् ॥ २३७ ॥ विनिवृत्ता परस्मिन्नाशा येषाम् ॥ २३८ ॥

शब्दादीनां विषयाणां परिणाममन्यथाभवनरूपं, दुःखहेतुमेव च सम्प्रधार्य। संसारे दुःखान्येव रागद्वेषात्मकानि ॥२३९॥

प्रदोषं–प्रद्वेषं । अव्यथितोऽपीडितः ॥ २४० ॥

मौनी निरवद्यभाषी, एकाकी निष्कलहो वा, वशे स्थापितानि, परीषहाः सम्यक् सह्यन्ते, कषायाणामुदयो निरुद्धः ॥२४१॥

शब्दादिसङ्गे निःस्पृहः। प्रशमगुणाः स्वाध्यायादयस्तेषां समूहस्तेन विभूषितः। अभिभवति देवमनुष्यादीनां नारकादीनां च ॥ २४२ ॥

× × × × × × ×

विरतिः–पापविरमणं, ध्यानं–धर्मध्यानादि, भावनाऽनित्याद्याः, योगा–आवश्यकादिव्यापाराः। सुखेन ॥ २४४ ॥

धर्मात् "संती य म[द्द]ज्जव० १०" भूम्यादिजीवा नव, अजीवा १०, करणकारणानुमतित्रयं, मनोवचनकायत्रयम् ॥ २४५॥

संसारभीरुसुलभाप्यपारस्य। प्राप्तः। विर(क्तताया)क्राया (?) दूरानुयायिनं। तत्कालावस्थायामुचितं प्रकृष्टम् ॥ २४६॥

धर्मध्यानस्य भेदचतुष्टयमाह–सम्बुद्धिसम्पर्कमाप्य ॥ २४७ ॥

वीतरागवचनं च। आज्ञायाः सर्वज्ञदत्ताया गवेषणं, तस्या अर्थनिश्चयः। एभिर्हेतुभिरैहलौकिकोऽपायः, पारलौकिको नरकतिर्यग्गतिभ्रमणरूपो धर्मार्थिना चिन्त्यते, सोऽपायविचयः ॥ २४८ ॥

अशुभकर्मणां द्व्यशीतिविधानां, शुभकर्मणां द्विचत्वारिंशद्भेदानां, विपाको–रसः कटुकमधुरत्वादिः, तस्याऽनुचिन्तनार्थः। द्रव्याणां षण्णां, क्षेत्रमूर्ध्वाधस्तिर्यग्भेदं, तेषामाकारानु(*चिन्तनं) गमनं–[अनु]चिन्तनम् ॥ २४९ ॥

× × × × ×

* पुनरुक्त इवाभात्ययमर्द्धचन्द्राकारचिह्नान्तर्गतः शब्दः, अर्थासङ्गतत्वात्।

समो-रागद्वेषविकलस्तस्याऽऽयो-लाभस्तत्र भवं सामायिकं। प्राक्तनपर्यायच्छेद उत्तरपर्यायस्थापनं। परिहरणं-परिहारस्तेन विशुद्धं। सूक्ष्मो-ऽत्यन्तकिट्टीकृतः सम्परायो-लोभकषायः, सूक्ष्मसम्परायगुणस्थानवर्तिनः। अकषायं यथाख्यातम् ॥२२८॥

अनेकैर्बहुप्रकारैरनुयोगैः किं कतिविधं कस्येत्यादिभिर्नयैर्नैगमादिभिः, प्रमाणैः प्रत्यक्षादिभिः, समनुगम्यं-ज्ञेयम् ॥२२९॥

एकतरस्याः सम्यग्दर्शनादिसम्पदोऽभावेऽपि, अपिः पूरणे, मोक्षमार्गोऽपि-मुक्तिप्रापकोऽपि न सिद्धिकरः, त्रिफलाव्यपदेशवत् ॥ २३० ॥ चारित्रं दर्शनज्ञानलाभे। चारित्रलाभे ॥ २३१ ॥

धर्मो दशविधः। आवश्यकानि-प्रतिक्रमणालोचनादीनि ॥ २३२ ॥ सम्यक्त्वादीनां जघन्याद्याराधनानाम् ॥ २३३ ॥

सम्यक्त्वादिसम्पदां तत्परेण-व्यग्रेण, तेष्वेव-सम्यक्त्वादिषु। तत्परेषु साधुषु, जिनेषु, भक्तिरान्तरा-प्रीतिः। उपग्रहस्तदुचिताशनपानशयनासनादिप्रदानरूपः। समाधिः-स्वास्थ्यं स्वपरयोः। एतेषां करणेन ॥ २३४ ॥

यस्तमेव प्रपश्यति-गुणानां ज्ञानादीनां। परतस्तेषु। अधृष्यस्याऽधर्षणीयस्य, मत्सरश्चित्तस्थ एव कोपः ॥ २३५ ॥

प्रशम एव निराबाधसुखं सदाचारे रतस्य साधोरिति, तस्य किं साधर्म्यं? सुरासुरनरलोकेऽस्मिन् ॥ २३६ ॥

न केनाऽपि स्वयं प्रापितं-याचितम् ॥ २३७ ॥ विनिवृत्ता परस्मिन्नाशा येषाम् ॥ २३८ ॥

शब्दादीनां विषयाणां परिणाममन्यथाभवनरूपं, दुःखहेतुमेव च सम्प्रधार्य। संसारे दुःखान्येव रागद्वेषात्मकानि ॥२३९॥

प्रदोषं-प्रद्वेषं। अव्यथितोऽपीडितः ॥ २४० ॥

मौनी निरवद्यभाषी, एकाकी निष्कलहो वा, वशे स्थापितानि, परीषहाः सम्यक् सह्यन्ते, कषायाणामुदयो निरुद्धः ॥२४१॥

शब्दादिसङ्गे निःस्पृहः । प्रशमगुणाः स्वाध्यायादयस्तेषां समूहस्तेन विभूषितः । अभिभवति देवमनुष्यादीनां नारकादीनां च ॥ २४२ ॥

× × × × × × ×

विरतिः–पापविरमणं, ध्यानं–धर्मध्यानादि, भावनाऽनित्याद्याः, योगा–आवश्यकादिव्यापाराः । सुखेन ॥ २४४ ॥
धर्मात् "खंती य म[द्दव]ज्जव० १०" भूम्यादिजीवा नव, अजीवा १०, करणकारणानुमतित्रयं, मनोवचनकायत्रयम् ॥२४५॥
संसारभीरुसुखप्राप्यपारस्य । प्राप्तः । विर(क्तताया)काया (?) दूरानुयायिनं । तत्कालावस्थायामुचितं प्रकृष्टम् ॥२४६॥
धर्मध्यानस्य भेदचतुष्टयमाह–सम्बुद्धिसम्पर्कमाप्य ॥ २४७ ॥
वीतरागवचनं च । आज्ञायाः सर्वज्ञदत्ताया गवेषणं, तस्या अर्थनिश्चयः । एभिर्हेतुभिरैहलौकिकोऽपायः, पारलौकिको नरकतिर्यग्गतिभ्रमणरूपो धर्मार्थिना चिन्त्यते, सोऽपायविचयः ॥ २४८ ॥
अशुभकर्मणां द्व्यशीतिविधानां, शुभकर्मणां द्विचत्वारिंशद्भेदानां, विपाको–रसः कटुकमधुरत्वादिः, तस्याऽनुचिन्तनार्थः । द्रव्याणां षण्णां, क्षेत्रमूर्ध्वाधस्तिर्यग्भेदं, तेषामाकारानु(*चिन्तनं) गमनं–[अनु]चिन्तनम् ॥ २४९ ॥

× × × × ×

---

* पुनरुक्त इवाभात्ययमर्द्धचन्द्राकारचिह्नान्तर्गतः शब्दः, अर्थासङ्गत्वात् ।

नित्योद्विग्नस्य-संसारोपरि नित्यमुद्वेगं कुर्वतो जितकोपाहङ्कारस्य । कलिमलं-पापं । जितसर्वलोभस्य ॥ २५१ ॥
विविक्तौ-पृथग्भूतौ बन्धुजनशत्रुवर्गौ यस्य, समस्तुल्यो वासीचन्दनाभ्यां कल्पनप्रदेहादिः-छेदनानुलेपनादिर्यस्य स तथा, एवंविधो देहो यस्य ॥ २५२ ॥
कृतारम्भाभिरतेः, [यतः स]स्वकार्य एव व्याप्रियते, न बहिः प्रीतिं विदधाति । दृढममत्वस्य ॥ २५३ ॥
चित्तनैर्मल्यात् । प्रमाददण्डयोगैर्विशुद्ध्यमानस्य-विमुच्यमानस्य । अग्र्यां-प्रधानभूताम् ॥ २५४ ॥
प्राक्तनकर्मक्षयकरणदक्षं, अथाऽनन्तरं घातिकर्मणां चतुर्णां क्षयैकदेशोऽसमस्तक्षयस्तदुत्थं, ऋद्धय आमर्षौषध्यादयः, प्रवेकाअवधिज्ञानादिविशेषाः, विभवास्तृणाग्रादपि कनकवृष्टिकर्तृत्वादयस्ते विद्यन्ते यत्र तत्तथा, जातं भद्रं-कल्याणमस्य तस्य ॥२५५॥
सुखनिभृतिरसामृतकल्पाहारेष्वगुरुगौरवरहिताः, अकृतादर इत्यर्थः । लब्धिमाकाशगमनादिकां दुष्प्रापां कापुरुषैः । तस्यामामर्षौषध्यादिविभूतौ प्राप्तायामपि ॥ २५६ ॥ सर्वसुरवरर्द्धिश्चतुर्विधेन्द्रविभूतिः ॥ २५७ ॥
तज्जयं-तपोऽनुष्ठानजन्यातुल्यविभूतिवन्ध्याभिभवं । यथा तीर्थंकरस्तत्स्थानकं प्राप्तस्तस्याऽसावपि भवति ॥ २५८ ॥
पृथक्त्ववितर्कसविचारं १, एकत्ववितर्कमविचारं २ । कर्माष्टकमध्ये स्वामिनम् ॥ २५९ ॥
अथ क्षपकश्रेणिमारोहन् मोहमुन्मूलयन् प्रथममनन्तानुबन्धिनां-यावज्जीवावस्थायिकषायाणां, ततो मिथ्यात्वमोह एव गहनं, ततोऽपि मिश्रं, सम्यक्त्वं च मिथ्यात्वं च सम्यग्मिथ्यात्वं, एतावता मिश्रम् ॥ २६० ॥
सम्यक्त्वं-क्षायोपशमिकपुञ्जरूपं, ततो द्वितीयतृतीयकषायान् ॥ २६१ ॥

ह्रासरतीत्याद्युन्मू( छिते )लनेऽष्टाविंशतिविधेऽपि मोहे वीतरागो भवति ॥ २६२ ॥

सकल उद्घातितो-ध्वस्तो मोहो येन सः, अनुपलक्ष्यो-नाऽद्यापि स्वविषयां प्रतीतिमुत्पादयितुं प्रत्यलः, यथा राहुणा पूर्णचन्द्रो मुक्तोऽपि कियन्तं कालमनुपलक्ष्यो भवति, तथा क्षीणमोह इति ॥ २६३ ॥

यथा ज्वालितानिः काष्ठादिः, एवं ध्यानाग्निः । अनन्तगुणं तेजो यस्य । तपोऽनशनादि, स एव हविर्घृतम् ॥ २६४ ॥

अनुप्राप्तः-परिगतः । जीवानां सर्वेषां कर्मभाजां । दहेद्यदि संक्रमः स्यात् ॥ २६५ ॥

संक्रमः-सामस्त्येन कर्मप्रवेशः, अथ विभाग-एकदेशोऽपि नाऽऽक्रामति ॥ २६६ ॥

शिरउद्गतायां[ सूच्याः ]नाशात्क्षयाद्वृक्षस्य ध्रुवो निश्चयेन भवति ॥ २६७ ॥

क्षपितकषायत्वादन्तर्मुहूर्त्तकालं यावद्भूत्वा-स्थित्वा, युगपदेककालं ज्ञानावरण ५ दर्शनावरण ४ अन्तरायाणां ५ क्षयमाप्य ॥ २६८ ॥

शाश्वतमनवरतभवनशीलत्वात्, अनन्तं क्षयाभावात्, केनाऽपि तस्याऽतिशयितुमशक्यत्वात्, अनुपममपगतोपमानत्वात्, अनुत्तरमविद्यमानोत्तरत्वात्, निरवशेषं परिपूर्णत्वेनोत्पत्तेः, सम्पूर्णं सकलज्ञेयग्राहित्वात्, अप्रतिहतं सदाऽपि प्रतिघातकाभावात् ॥ २६९ ॥

कार्त्स्न्ये-परिपूर्णे लोकालोके कृत्स्नवस्तुपरिच्छेदित्वात् । गुणपर्यायवद्द्रव्यं, सहभाविनो गुणाः क्रमभाविनः पर्यायाः, सर्वार्थैः-सर्वप्रकारैः ॥ २७० ॥

क्षीणघातिकर्मचतुष्को, भवोपग्राहिकर्मचतुष्कवेदिता । जघन्येन घटिकाद्वयम् ॥ २७१ ॥

तेनाऽऽयुषाऽभिन्नं–सदृशं, क्षीरोदकवत्। संस्थितं चरमभवयोग्यमायुः, केवलिना दुर्भेदमनपवर्तनीयत्वात्, तथा वेदनीयं कर्म तदुपग्रहं । तेनाऽऽयुषोपगृह्यते–उपष्टभ्यते, तदुपग्रहमनपवर्तनीयत्वादायुः कर्मणा सह वेद्यत्वात् ॥ २७२ ॥

अधिकतरम् ॥ २७३ ॥

दण्डमूर्ध्वाधश्चतुर्दशरज्ज्वात्मकं बाहल्यतः शरीरमानं,कपाटं पूर्वापरलोकान्तव्यापिनं समस्तनिष्कूटव्यापनाल्लोकव्यापी २७४

अन्तराणि–निष्कूटगतजीवप्रदेशान् ॥ २७५ ॥

औदारिकशरीरयापकः, प्रथमाष्टमसमययोर्दण्डकरणसंहारलक्षणयोः, कथितोऽसौ–केवली ॥ २७६ ॥

स केवली करणत्रयशुद्धयोगमनुचितं सत्यं यतियोग्यं योगं–व्यापारं युङ्क्ते–प्रवर्तयति, सयोगो मोक्षं न गच्छतीति योगनिरोधमुपैति–प्राप्नोति ॥ २७७ ॥

तत्र प्रथमं मनोयोगं–मनःपर्याप्तिजनितव्यापारं शरीरप्रतिबद्धं मनोद्रव्यग्राहकं, तद्वियोजनार्थं पञ्चेन्द्रियस्य संज्ञिनो मनःपर्याप्त्या प्रथमसमयपर्याप्तकस्य यः सर्वजघन्यमनोयोगो–मनोवर्गणाग्रहणशक्तेर्व्यापारस्तस्मात्स्वात्मन्यसंख्येयगुणहान्या प्रतिसमयं निरुन्धन् सकलं निरुणद्धि, मनःपर्याप्त्या रहितो भवति ॥ २७८ ॥



द्वीन्द्रियः–कपर्दिकादिर्जीवः, साधारणः–सूक्ष्मनिगोदादिस्तयोः क्रमेण वाक्पर्याप्तिकायपर्याप्तिभ्यां प्रथमसमयपर्याप्तकयो-

जघन्ययोगी क्रमेण वागुच्छ्वासरूपी, ताभ्यामसंख्येयगुणहीनौ निरुणद्धि, सूक्ष्मकाययोगनिरोधे तु पनक—उल्लिजीवस्तस्माद-
पोऽसंख्यगुणहीनः पर्याप्तिद्वयरहितो भवति ॥ २७९ ॥

सूक्ष्मकाययोगनिरोधकाले तृतीयशुक्लध्यानी भवतीति तन्निरूपयन्नाह—सूक्ष्मक्रियमप्रतिपातिकं ध्यायति, तदेव च शैलेशीं
करोति—स्वदेहत्रिभागहीनात्मप्रदेशा[द्]घनीभवति । ततः परेण—शेषकालेन निरुद्धसकलयोगो व्युपरतसकलक्रियमनिवृत्ति-
ध्यानं ध्यायन् चरमकर्मांशं क्षपयति ॥ २८० ॥

चरमभवेऽन्तिममनुष्यजन्मनि संस्थानं देहोच्छ्रायप्रमाणं यस्य सिद्धिमुपजिगमिषोस्तस्मात्त्रिभागहीनं—तृतीयांशेन न्यूनं
संस्थानावगाहनापरिमाणं करोति ॥ २८१ ॥

स भगवान् केवली तस्यां शैलेश्यवस्थायां मनोवागुच्छ्वासकाययोगक्रियार्थविनिवृत्तो—निरुद्धसकलयोगक्रियोऽपरिमित-
निर्जरो—बहुकर्मक्षपणयुक्त आत्मा यस्य, स संसारमहासमुद्रादुत्तीर्णः—पारप्राप्त एव तिष्ठति ॥ २८२ ॥

ईषद्ध्रस्वानां—मनाग्ध्रस्वाक्षराणां पञ्चको 'अइउऋऌ' रूपस्तस्योद्गीरणं—प्रोच्चारणं, तावन्मात्रायां परिमाणतस्तत्तुल्यकालीयां
शैलेशीमेति—गच्छति । संयमवीर्याप्तबलः—सर्वसंवरवीर्येण प्राप्तबलो, विगताऽपगता लेश्या भावरूपा यस्य सः ॥ २८३ ॥

पूर्वरचितं—प्रथममेव समुद्घातावसरेऽवस्थापितं प्रकृतिशेषं गोत्रवेद्यायुषो यदवशिष्टमास्ते, तत्प्रकृतिशेषं संयमश्रेण्यामन्त-
र्मुहूर्तगतसमयप्रमाणायां संस्थाप्य समये समये क्षपयन्नसंख्यातगुणमुत्तरोत्तरेषु समयेषु ॥ २८४ ॥

चरमकर्मांशानुत्तरप्रकृतीं—स्त्रयोदशसंख्याः । विनिहत्याऽपनीय । युगपदेककालम् ॥ २८५ ॥

क्षीणघातिकर्मचतुष्को, भवोपग्राहिकर्मचतुष्कवेदिता । जघन्येन घटिकाद्वयम् ॥ २७१ ॥

तेनाऽऽयुषाऽभिन्नं–सदृशं, क्षीरोदकवत् । संस्थितं चरमभवयोग्यमायुः, केवलिना दुर्भेदमनपवर्तनीयत्वात्, तथा वेदनीयं कर्म तदुपग्रहं । तेनाऽऽयुषोपगृह्यते–उपष्टभ्यते, तदुपग्रहमनपवर्तनीयत्वादायुः कर्मणा सह वेद्यत्वात् ॥ २७२ ॥

अधिकतरम् ॥ २७३ ॥

दण्डमूर्ध्वाधश्चतुर्दशरज्ज्वात्मकं बाहल्यतः शरीरमानं, कपाटं पूर्वापरलोकान्तव्यापिनं समस्तनिष्कूटव्यापनाल्लोकव्यापी २७४

अन्तराणि–निष्कूटगतजीवप्रदेशान् ॥ २७५ ॥

औदारिकशरीरव्यापकः, प्रथमाष्टमसमययोर्दण्डकरणसंहारलक्षणयोः, कथितोऽसौ–केवली ॥ २७६ ॥

स केवली करणत्रयशुद्धयोगयानुचितं सत्यं यतियोग्यं योगं–व्यापारं युङ्क्ते–प्रवर्तयति, सयोगो मोक्षं न गच्छतीति योगनिरोधमुपैति–प्राप्नोति ॥ २७७ ॥

तत्र प्रथमं मनोयोगं–मनःपर्याप्तिजनितव्यापारं शरीरप्रतिबद्धं मनोद्रव्यग्राहकं, तद्वियोजनार्थं पञ्चेन्द्रियस्य संज्ञिनो मनःपर्याप्त्या प्रथमसमयपर्याप्तकस्य यः सर्वजघन्यमनोयोगो–मनोवर्गणाग्रहणशक्तेर्व्यापारस्तस्मात्स्वात्मन्यसंख्येयगुणहान्या प्रतिसमयं निरुन्धन् सकलं निरुणद्धि, मनःपर्याप्त्या रहितो भवति ॥ २७८ ॥

द्वीन्द्रियः–कपर्दिकादिर्जीवः, साधारणः–सूक्ष्मनिगोदादिस्तयोः क्रमेण वाक्पर्याप्तिकायपर्याप्तिभ्यां प्रथमसमयपर्याप्तकयो-

र्जघन्ययोगौ क्रमेण वागुच्छ्वासरूपौ, ताभ्यामसंख्येयगुणहीनौ निरुणद्धि, सूक्ष्मकाययोगनिरोधे तु पनक-उद्भिजीवस्तस्माद्-धोऽसंख्यगुणहीनः पर्याप्तिद्वयरहितो भवति ॥ २७९ ॥

सूक्ष्मकाययोगनिरोधकाले तृतीयशुक्लध्यानी भवतीति तन्निरूपयन्नाह—सूक्ष्मक्रियमप्रतिपातिकं ध्यायति, तदैव च शैलेशीं करोति-स्वदेहत्रिभागहीनात्मप्रदेशा[द्]घनीभवति । ततः परेण-शेषकालेन निरुद्धसकलयोगो व्युपरतसकलक्रियमनिवृत्ति-ध्यानं ध्यायन् चरमकर्मांशं क्षपयति ॥ २८० ॥

चरमभवेऽन्तिममनुष्यजन्मनि संस्थानं देहोच्छ्रायप्रमाणं यस्य सिद्धिमुपजिगमिषोस्तस्मात्त्रिभागहीनं-तृतीयांशेन न्यूनं संस्थानावगाहनापरिमाणं करोति ॥ २८१ ॥

स भगवान् केवली तस्यां शैलेश्यवस्थायां मनोवागुच्छ्वासकाययोगक्रियार्थविनिवृत्तो-निरुद्धसकलयोगक्रियोऽपरिमित-निर्जरो-बहुकर्मक्षपणयुक्त आत्मा यस्य, स संसारमहासमुद्रादुत्तीर्णः-पारप्राप्त एव तिष्ठति ॥ २८२ ॥

ईषद्ध्रस्वानां-मनाग्ध्रस्वाक्षराणां पञ्चको 'अइउऋऌ' रूपस्तस्योद्गीरणं-प्रोच्चारणं, तावन्मात्रायां परिमाणतस्तत्तुल्यकालीयां शैलेशीमेति-गच्छति । संयमवीर्याप्तबलः-सर्वसंवरवीर्येण प्राप्तबलो, विगताऽपगता लेश्या भावरूपा यस्य सः ॥ २८३ ॥

पूर्वरचितं-प्रथममेव समुद्घातावसरेऽवस्थापितं प्रकृतिशेषं गोत्रवेद्यायुषो यदवशिष्टमास्ते, तत्प्रकृतिशेषं संयमश्रेण्यामन्त-र्मुहूर्तगतसमयप्रमाणायां संस्थाप्य समये समये क्षपयन्नसंख्यातगुणमुत्तरोत्तरेषु समयेषु ॥ २८४ ॥

चरमकर्मांशानुत्तरप्रकृतीः-त्रयोदशसंख्याः । विनिहत्याऽपनीय । युगपदेककालम् ॥ २८५ ॥

सर्वगतियोग्यसंसारमूलहेतूनि । सर्वत्र भवनशीलानि । औदारिकादिशरीराणां यत्स्वरूपं, तेन सर्वेण रहितः ॥ २८६ ॥

अवक्रश्रेणिगतिं, अविद्यमानस्पर्शो । अवक्रगत्या, अप्रतिहतगतिः ॥ २८७ ॥

ज्ञानोपयोगेन वर्तमानः, ततः परमुपयोगद्वयं सिद्धानामिति ॥ २८८ ॥

सादिकं—यस्मिन्सिद्धोऽजनि तमादिं कृत्वा, अनन्तं पुनः क्षयाभावात्, व्याबाधारहितं । केवलान्यद्वितीयानि क्षायिकानि, मुक्तः कृत्स्नकर्मक्षयात् ॥ २८९ ॥

मुक्तः सन्[न]जीवोऽभावोऽसद्रूपः, स्वलक्षणस्य ज्ञानदर्शनादेर्भावात्, स्वतोऽर्थसिद्धेः । यद्यपि छाद्मस्थिकोपयोगात्के पल्योपयोगान्तरमुदेति, तथाप्युपयोगसाम्यान्न मियते, ज्ञानस्वभावत्वात्, भावान्तरसंक्रान्तेः, जलस्थितलवणस्य रूपतोऽदर्शनेऽपि रसत उपलब्धिवत् ॥ २९० ॥

इहैव–संसारे स न तिष्ठति, अनिबन्धान्मनुजादिभवकारणानामत्यन्तलयात्, अनाश्रयात्, मुक्तस्य हि मनुजभवो नाश्रयः, किन्तु सिद्धिरेव, संसारव्यापाराभावाच्छरीरादिकारणाभावाच्च ॥ २९१ ॥

अधो न याति, गुरुत्वाभावात्, अशक्योऽयं भावो–यत्कर्ममुक्तोऽधो याति । लोकान्तादपि परतो न याति मुक्तः, उपग्रहकारिधर्मद्रव्याभावात्, घुनकस्तारको यानपात्रं यथा स्थले न याति, उपग्रहाभावात् ॥ २९२ ॥

योगो मनःप्रभृतिकः, प्रयोग आत्मनः क्रिया, तयोरभावान्न तिर्यग्गतिरस्ति, तथा सिद्धस्य–मुक्तस्योर्ध्वमेव गतिर्भवति, कियद्यावत्?, आलोकान्तम् ॥ २९३ ॥

कुम्भकारभ्रामितचक्रस्य तद्व्यापाराभावेऽपि भ्रमणवत्, एरण्डफलवदलाबुवत्परमहंसयज्वलनधूमवत्तृतीये शुक्लध्याने सूक्ष्मक्रियया प्रयोगेण ॥ २९४ ॥

× × × × × × ×

घटमानः प्रवचनोक्तसकलक्रियासु, प्रयत्नेन चेष्टतेऽहर्निशं क्रियासु ॥ २९६ ॥

वीर्यसम्पत्-साहससमृद्धिः, एतेषां संहननादीनां वैकल्यात् । कर्मणां निकाचनायस्थाप्राप्तिः । कर्मक्षयमकुर्याऽविधायोपरमं-विनाशमेति-गच्छति ॥ २९७ ॥

नवसु[च]ग्रैवेयकेषु । 'अर्ह मह पूजायां' इति धातोर्महान्ति-पूज्यानि शास्त्रिद्युतिमन्ति यस्य ॥ २९८ ॥

विशिष्टान्वयेषु बहुपुरुषेषु गुणवत्सु-सम्यक्त्वादिगुणयुतेषु ॥ २९९ ॥

उत्पत्तिमात्मलाभं प्राप्य कुलमुपाधि, बन्धुः-पित्रादिवंशो, विभवो धनादी, रूपं सुन्दराकारादि राग... ,

बलं-प्राणं, बुद्धिरौत्पत्तिक्यादिका, ताभिः सम्पन्नः ॥ ३०० ॥

भावितोऽन्तरात्मा मनो यस्य सः । ततः परं मनुष्यलोकात्स्वर्गान्तरितः ॥ ३०१ ॥

इह-मनुष्यलोके, जिनागमे मनुष्यः, श्रावको निश्चयेन कृतनिश्चयः, अतिशयज्ञानाभियोगो, सर्वांगे-... , शील-गुणोत्तरगुणाः, व्रतानि प्राणातिपातादिनिवृत्तिरूपाणुव्रतानि, भावना अनित्यभावनादिका द्वादश, एभी रञ्जित-भावितो मनो यस्य सः ॥ ३०२ ॥

स्थूला–बादराः प्राणिनस्तेभ्यो विरतिस्तेषामवधः, न पृथिव्यादिस्थावरेभ्यः। कन्यादिविषयमनृतमन्यथा भाषणं। बृहच्चौर्यं, यस्मिन् हृते चौर इति व्यपदिश्यते। परपरिगृहीतस्त्रीगमनं, रतिर्विषयादिषु प्रीतिः, अरतिर्व्रतादिषूद्वेगः, ताभ्यां सदा वर्जितः। दिग्व्रतं षट्सु दिक्षु गमनपरिमाणं। देशावकाशिकं प्रतिदिनगमनादेर्मर्यादाकरणं, अनर्थदण्डः शरीरादीनां प्रयोजनं विना पापोपदेशादिः ॥ ३०३ ॥

सामायिकं द्विविधं त्रिविधेन योगेन सावद्ययोगप्रत्याख्यानं प्रतिक्रमणं च। पौषधं सर्वाहारशरीरसत्कारब्रह्मचर्याव्यापाररूपचतुर्विधोऽष्टम्यादिषु निक्षेपेण तं करोति। उपभोगोऽन्नपानपुष्पधूपस्नानाङ्गरागादिः, परिभोगो वस्त्रालङ्काराङ्गनाशयनाऽऽसनसदनादिस्तयोः परिमाणं, यत्र व्रते कृत्वा–विधाय। न्यायागतं–अगर्हितव्यवहारेणोपात्तं साधूनां देयवस्तु। कल्प्यं–साधूनामनुद्दिश्य कृतं, विधिनेति निष्पन्नपाकः सर्वोऽपि सत्कारपूर्वकम् ॥ ३०४ ॥

चैत्यानि–जिनबिम्बानि, आयतनानि–तेषामेवाऽगाराणि, प्रस्थापना–तेषामेव प्रकृष्टमहाविभूत्या वादित्रगीतनृत्यतालानुचरस्वजनपरिवारादिकया प्रतिष्ठा। एतानि कृत्वा–विधाय, शक्तितः–स्वसामर्थ्यानुसारेण प्रयतो–यथा प्रवचनप्रोद्भावना स्यात्तथा पूजा–सपर्या ॥ ३०५ ॥

प्रशमे–कषायादिजये रतिः–प्रीतिस्तस्यां नित्यं–सदाकालं तृषितः–साभिलाषः। जिनेऽर्हत्सु गुरुष्वाचार्यादिषु सत्साधुषु वन्दनाभिरतो–नमस्करणेन प्रीतः, काले–स्वायुश्छेदासन्ने संलेखनां–कषायाद्यल्पीकृततपःक्रियां योगेन–शुभध्यानेन सुविशुद्धामाराध्याभिमुखीकृत्य ॥ ३०६ ॥

प्राप्तो–ऊर्ध्वं कल्पेषु–सौधर्मादिदेवलोकेष्वधिपतित्वं वा सामानिकत्वमन्यद्वा सामान्यदेवत्वं विमानवासविशिष्टमवाप्य तत्र स्थानानुरूपं सुखम् ॥ ३०७ ॥

आर्यदेशजातिकुलविभवरूपसौभाग्यादिकां सम्यक्त्वादिगुणसम्पदं च ॥ ३०८ ॥ मनुष्येषु ॥ ३०९ ॥

कविरात्मन औद्धत्यं परिहरति—धर्मकथिकां–द्विविधधर्मप्रतिपादिकामिमां प्रशमरतिं, रत्नाकरादिव जीर्णकपर्दिकामिव, प्रशमप्रीत्या ॥ ३१० ॥ सर्वात्मनाऽशेषप्रकारैः । सततमनवरतं, यत्नः कार्यः ॥ ३११ ॥

इह प्रशमरतिप्रकरणेऽसमञ्जस–असङ्गतं, छन्दो–रचनाविशेषः, शब्दः–संस्कृतादिभेदभिन्नः, समयः–सिद्धान्तस्तस्याऽर्थोऽभिधेयं । मर्षयितव्यं–क्षन्तव्यम् ॥ ३१२ ॥

ऐहिकामुष्मिकसुखमूलकारणं । सर्वभावानां विनिश्चयो–निर्णयस्तस्य प्रकटनकरं । क्षान्त्यादिसर्वगुणसिद्धिसाधने धनमिव जयमनुभवति ॥ ३१३ ॥

---

इति श्रेष्ठि–देवचंद–लालभाई–जैनपुस्तकोद्धारे–ग्रन्थाङ्कः ८८

---

यत्र यत्र ग्रन्थेऽस्मिन् अवचूर्णी नास्ति प्रणीता तत्र तत्र × × × एतानि चिह्नानि निम्नस्थानि तथा सोपाधिमिति ज्ञेयम् ।

इति श्रीमदुमास्वातिविरचितं सटीकं सावचूर्णिकं च

# प्रशमरतिप्रकरणं समाप्तम् ॥

इति श्रेष्ठि-देवचंद-लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः ८८